श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

# ॥ श्री संक्षेप सुन्दरकाण्डम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

श्रीमते रामानुजाय नमः

# ॥ श्री संक्षेप सुन्दरकाण्डम् ॥

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

## ॥ श्रीमद्रामायण पठनोपक्रमे अनुसन्धेयाः श्लोकाः ॥

रामानुज दयापात्रं ज्ञानवैराग्य भूषणम्।
श्रीमद्वेङ्कटनाथार्यं वन्दे वेन्दान्तदेशिकम्॥ १ ॥

लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम्।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरंपराम्॥ २ ॥

यो नित्यमच्युतपदाम्बुजयुग्मरुक्म
व्यामोहतस्तदितराणि तृणायमेने।
अस्मद्गुरोर्भगवतोस्य दयैकसिन्धोः
रामानुजस्य चरणौ शरणं प्रपद्ये॥ ३ ॥

माता पिता युवतयस्तनया विभूतिः
सर्वं यदेव नियमेन मदन्वयनाम्।
आद्यस्य नः कुलपतेर्वकुळाभिरामं
श्रीमत् तदङ्घ्रियुगळं प्रणमामि मूर्ध्ना॥ ४ ॥

भूतं सरश्च महदाह्वय भट्टनाथ
श्रीभक्तिसार कुलशेखर योगिवाहान्।
भक्ताङ्घ्रिरेणु परकाल यतीन्द्र मिश्रान्
श्रीमत् पराङ्कुशमुनिं प्रणतोस्मिनित्यम्॥ ५ ॥

पितामहस्यापि पितामहाय
प्राचेतसादेश फलप्रदाय।

श्रीभाष्यकारोत्तम देशिकाय
    श्रीशैल पूर्णाय नमो नमस्तात्॥ ६ ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये॥ ७ ॥

यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम्।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये॥ ८ ॥

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम्।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे॥ ९ ॥

कूजन्तं रामरामेति मधुरं मधुराक्षरम्।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम्॥ १० ॥

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः।
शृण्वन् रामकथानादं को न याति परां गतिम्॥ ११ ॥

यः पिबन् सततं रामचरितामृतसागरम्।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम्॥ १२ ॥

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम्।
रामायणमहामालारत्नं वन्देऽनिलात्मजम्॥ १३ ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम्।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम्॥ १४ ॥

मनोजवं मारुततुल्यवेगं
    जितेन्द्रियं बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं
    श्रीरामदूतं शिरसा नमामि॥ १५ ॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं
    यः शोकवह्निं जनकात्मजायाः।

आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम्॥ १६॥

आञ्जनेयमतिपाटलाननं
काञ्चनाद्रि कमनीयविग्रहम्।
पारिजात तरुमूल वासिनं
भावयामि पवमाननन्दनम्॥ १७॥

यत्र यत्र रघुनाथकीर्तनं
तत्र तत्र कृतमस्ताञ्जलिम्।
बाष्पवारिपरिपूर्णलोचनं
मारुतिं नमत राक्षसान्तकम्॥ १८॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे।
वेदः प्राचेतसा दासीत् साक्षात् रामायणात्मना॥ १९॥

चरितं रघुनाथस्य शतकोटि प्रविस्तरम्।
एकैकमक्षरं प्रोक्तं महापातकनाशनम्॥ २०॥

शृण्वन् रामायणं भक्त्या यः पादं पदमेव वा।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा॥ २१॥

वाल्मीकि गिरि संभूता रामसागर गामिनी।
पुनाति भुवनं पुण्या रामायण महानदी॥ २२॥

श्लोकसारसमाकीर्णं सर्गकल्लोलसङ्कुलम्।
काण्डग्राह महामीनं वन्दे रामायणार्णवम्॥ २३॥

यः कर्णाञ्जलि संपुटैरहरहः संयक् पिबत्यादरात्
वाल्मीकेर्वदनारविन्द गलितं रामायणाख्यं मधु।
जन्म व्याधि जरा विपत्ति मरणैरत्यन्त सोपद्रवं
संसारं स विहाय गच्छति पुमान् विष्णोः पदम् शाश्वतम्॥ २४॥

तदुपगत समास सन्धियोगम्
सममधुरोपनतार्थ वाक्य बद्धं।
रघुवर चरितं मुनिप्रणीतम्
दशशिरसश्च वधम् निशामयध्वम्॥ २५ ॥

श्रीराघवं दशरथात्मजमप्रमेयं
सीतापतिं रघुकुलान्वयरत्नदीपम्।
आजानुबाहुमरविन्द दळालयताक्षम्
रामं निशाचरविनाशकरं नमामि॥ २६ ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम्।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम्॥ २७ ॥

आपदामपहर्तारं दातारं सर्वसंपदाम्।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम्॥ २८ ॥

धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि।
पौरुषेचाऽप्रतिद्वन्द्वः शरैनं जहि रावणिम्॥ २९ ॥

तपः स्वाध्यायनिरतं तपस्वी वाग्विदां वरम्।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम्॥ ३० ॥

श्रीरघुनन्दन परब्रह्मणे नमः

॥ अथ श्री संक्षेप सुन्दरकाण्डम्॥

ततो रावणनीतायाः सीतायाः शत्रुकर्शनः।
इयेष पदमन्वेष्टुं चारणाचरिते पथि॥ १ ॥

यथा राघवनिर्मुक्तः शरः श्वसनविक्रमः।
गच्छेत्तद्वद्गमिष्यामि लङ्कां रावणपालिताम्॥ २ ॥

प्रविश्य नगरीं लङ्कां कपिराजहितङ्करः।
चक्रेऽथ पादं सव्यं च शत्रूणां स तु मूर्धनि॥ ३॥

दृष्टमन्तःपुरं सर्वं दृष्टा रावणयोषितः।
न सीता दृश्यते साध्वी वृथा जातो मम श्रमः॥ ४॥

प्रविशन्निष्पतंश्चापि प्रपतन्नुत्पतन्नपि।
सर्वमप्यवकाशं स विचचार महाकपिः॥ ५॥

अशोकवनिका चेयं दृश्यते या महाद्रुमा।
इमामभिगमिष्यामि न हीयं विचिता मया॥ ६॥

अशोकवनिकायां तु तस्यां वानरपुङ्गवः।
ततो मलिनसंवीतां राक्षसीभिः समावृताम्॥ ७॥

उपवासकृशां दीनां निःश्वसन्तीं पुनः पुनः।
ददर्श शुक्लपक्षादौ चन्द्ररेखामिवाऽमलाम्॥ ८॥

तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम्।
तर्कयामास सीतेति कारणैरुपपादिभिः॥ ९॥

अस्या देव्या मनस्तस्मिन् तस्य चास्यां प्रतिष्ठितम्।
तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति॥ १०॥

एवं सीतां तदा दृष्ट्वा हृष्टः पवनसंभवः।
जगाम मनसा रामं प्रशशंस च तं प्रभुम्॥ ११॥

राजा दशरथो नाम रथकुञ्जरवाजिमान्।
तस्य पुत्रः प्रियो ज्येष्ठस्ताराधिपनिभाननः॥ १२॥

रामो नाम विशेषज्ञः श्रेष्ठः सर्वधनुष्मताम्।
तस्य सत्याभिसन्धस्य वृद्धस्य वचनात् पितुः।
सभार्यः सह च भ्रात्रा वीरः प्रव्राजितो वनम्॥ १३॥

ततस्त्वमर्षापहृता जानकी रावणेन तु।
स मार्गमाणस्तां देवीं रामः सीतामनिन्दिताम्।
आससाद वने मित्रं सुग्रीवं नाम वानरम्॥ १४॥

सुग्रीवेणापि सन्दिष्टा हरयः कामरूपिणः।
दिक्षु सर्वासु तां देवीं विचिन्वन्ति सहस्रशः॥ १५॥

तस्या हेतोर्विशालाक्ष्याः सागरं वेगवान् प्लुतः।
यथा रूपां यथा वर्णां यथा लक्ष्मीं च निश्चिताम्।
अश्रौषं राघवस्याहं सेयमासादिता मया॥ १६॥

जानकी चापि तच्छ्रुत्वा विस्मयं परमं गता।
सा ददर्श कपिं तत्र प्रश्रितं प्रियवादिनम्॥ १७॥

तामब्रवीन्महातेजा हनूमान् मारुतात्मजः।
अहं रामस्य सन्देशात् देवि दूतस्तवागतः॥ १८॥

वैदेहि कुशली रामस्त्वां च कौशलमब्रवीत्।
लक्ष्मणश्च महातेजा भर्तुस्तेऽनुचरः प्रियः॥ १९॥

सा तयोः कुशलं देवी निशंय नरसिंहयोः।
प्रीतिसंहृष्टसर्वाङ्गी हनुमन्तम् अथाब्रवीत्॥ २०॥

कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे।
एति जीवन्तमानन्दो नरं वर्षशतादपि॥ २१॥

भूय एव महातेजा हनुमान् मारुतात्मजः।
अब्रवीत् प्रश्रितं वाक्यं सीताप्रत्ययकारणात्॥ २२॥

रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम्।
प्रत्ययार्थं तवानीतं तेन दत्तं महात्मना॥ २३॥

गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषणम्।
भर्तारमिव संप्राप्तं जानकी मुदिताऽभवत्॥ २४॥

ततो वस्त्रगतं मुक्त्वा दिव्यं चूडामणिं शुभम्।
प्रदेयो राघवायेति सीता हनुमते ददौ॥ २५ ॥

ततस्तु हनुमान् वीरो बभञ्ज प्रमदावनम्।
दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः॥ २६ ॥

न रावणसहस्रं मे युद्धे प्रतिबलं भवेत्।
अर्दयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीम्।
समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम्॥ २७ ॥

वेष्टयन्ति स्म लाङ्गूलं जीर्णैः कार्पासकैः पटैः।
तैलेन परिषिच्याथ तेऽग्निं तत्रावपातयन्॥ २८ ॥

दीप्यमाने ततस्तस्य लाङ्गूलाग्रे हनूमतः।
राक्षस्यस्ता विरूपाक्ष्यः शंसुर्देव्यास्तदप्रियम्॥ २९ ॥

मङ्गलाभिमुखी तस्य सा तदासीन्महाकपेः।
उपतस्थे विशालाक्षी प्रयता हव्यवाहनम्॥ ३० ॥

यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः।
यदि वास्त्येकपत्नीत्वं शीतो भव हनूमतः॥ ३१ ॥

हनूमता वेगवता वानरेण महात्मना।
लङ्कापुरं प्रदग्धं तद्रुद्रेण त्रिपुरं यथा॥ ३२ ॥

एवमाश्वास्य वैदेहीं हनूमान् मारुतात्मजः।
गमनाय मतिं कृत्वा वैदेहीमभ्यवादयत्॥ ३३ ॥

ततः स कपिशार्दूलः स्वामिसन्दर्शनोत्सुकः।
आरुरोह गिरिश्रेष्ठमरिष्टमरिमर्दनः॥ ३४ ॥

निपपात महेन्द्रस्य शिखरे पादपाकुले।
दृष्टा सीतेति विक्रान्तः संक्षेपेण न्यवेदयत्॥ ३५ ॥

प्रीतिमन्तस्ततः सर्वे वायुपुत्रपुरस्सराः।
महेन्द्राग्रं परित्यज्य पुप्लुवुः प्लवगर्षभाः॥ ३६ ॥

निपेतुर्हरिराजस्य समीपे राघवस्य च।
हनुमांश्च महाबाहुः प्रणम्य शिरसा ततः।
नियतामक्षतां देवीं राघवाय न्यवेदयत्॥ ३७ ॥

तौ जाताश्वासौ राजपुत्रौ विदित्वा
तच्चाभिज्ञानं राघवाय प्रदाय।
देव्या चाख्यातं सर्वमेवानुपूर्व्यात्
वाचा संपूर्णं वायुपुत्रः शशंस॥ ३८ ॥

वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः।
कात्यायनः सुयज्ञश्च गौतमो विजयस्तथा॥ ३९ ॥

अभ्यषिञ्चन् नरव्याघ्रं प्रसन्नेन सुगन्धिना।
सलिलेन सहस्राक्षं वसवो वासवं यथा॥ ४० ॥

आयुष्यमारोग्यकरं यशस्यं
सौभ्रातृकं बुद्धिकरं शुभं च।
श्रोतव्यमेतन्नियमेन सद्भिः
आख्यानमोजस्करं ऋद्धिकामैः॥ ४१ ॥

॥ श्रीमद्रामायण पारायण समापने अनुसन्धेय श्लोकक्रमः ॥

एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम्॥ १ ॥

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः॥ २ ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः॥ ३ ॥

कावेरी वर्धतां काले काले वर्षतु वासवः।
श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम्॥ ४ ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु॥ ५ ॥

मङ्गळं कोसलेन्द्राय महनीयगुणाब्धये।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गळम्॥ ६ ॥

वेदवेदान्तवेद्याय मेघश्यामलमूर्तये।
पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गळम्॥ ७ ॥

विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः।
भाग्यानां परिपाकाय भव्यरूपाय मङ्गळम्॥ ८ ॥

पितृभक्ताय सततं भ्रातृभिः सह सीतया।
नन्दिताखिललोकाय रामभद्राय मङ्गळम्॥ ९ ॥

त्यक्तसाकेतवासाय चित्रकूटविहारिणे।
सेव्याय सर्वयमिनां धीरोदाराय मङ्गळम्॥ १० ॥

सौमित्रिणा च जानक्या चापबाणासिधारिणे।
संसेव्याय सदा भक्त्या स्वामिने मम मङ्गळम्॥ ११ ॥

दण्डकारण्यवासाय खण्डितामरशत्रवे।
गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गळम्॥ १२ ॥

सादरं शबरीदत्तफलमूलाभिलाषिणे।
सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गळम्॥ १३ ॥

हनुमत्समवेताय हरीशाभीष्टदायिने।
वालिप्रमथनायास्तु महाधीराय मङ्गळम्॥ १४ ॥

श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे।
जितराक्षसराजाय रणधीराय मङ्गळम्॥ १५॥

आसाद्य नगरीं दिव्याम् अभिषिक्ताय सीतया।
राजाधिराजराजाय रामभद्राय मङ्गळम्॥ १६॥

मङ्गळाशासनपरैर्मदाचार्यपुरोगमैः।
सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गळम्॥ १७॥

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्याऽऽत्मना वा प्रकृतेः स्वभावात्।
करोमि यद्यत् सकलं परस्मै
नारायणायेति समर्पयामि॥ १८॥

॥ इति श्री संक्षेप सुन्दर्काण्डं संपूर्णम्॥

कवितार्किकसिंहाय कल्याणगुणशालिने।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः॥